# आपदुद्धारक बटुकभैरवस्तोत्रम्

श्रीगणेशाय नमः

सूत उवाच

मेरुपृष्ठे सुखासीनं देवदेवं त्रिलोचनम् ।
शंकरं परिपप्रच्छ पार्वती परमेश्वरम् ॥१॥

पार्वत्युवाच ॥

भगवन् सर्वधर्मज्ञ सर्वशास्त्रगमादिषु ।
आपदुद्धारणं मन्त्रं सर्वसिद्धिविधाकम् ॥२॥
सर्वेषाचैव भूतानां हितार्थं वांछितं मया ।
विशेषतस्तु राज्ञां वै शांतिपुष्टिप्रसाधनम् ॥३॥
अङ्गन्यासकरन्यास- देहन्यासमन्वितम् ।
वक्तुमर्हसि देवेश मम हर्षविवर्धनम् ॥४॥

ईश्वर उवाच ॥

शृणुदेवि ! महामन्त्र- मापदुद्धाहेतुकम् ।
सर्वदुःखप्रशमनं सर्वशत्रुविनाशनम् ॥५॥
अपस्मारादिरोगाणां ज्वरादीनां विशेषतः ।
नाशनं स्मृतिमात्रेण मन्त्रराजमिमं प्रिये ॥६॥
ग्रहराजभयानां च नाशनं सुखवर्द्धनम् ।
स्नेहाद् क्ष्यामि ते मन्त्रं सर्वसारमिमं प्रिये ॥७॥
प्रणवं पूर्वमुद्धृत्य देवी प्रणवमुद्धरेत् ।
बटुकायेति वै पश्चा-दापदुद्धारणायच ॥८॥
कुरु द्वयं ततः पश्चा-द्वटुकाय पुनर्वदेत् ।



देवीप्रणवमुद्धृत्य मन्त्रोद्धारमिमम्प्रिये ॥९॥
मत्रोद्धारमिदं पुण्यं त्रैलोक्य चातिदुर्लभम् ।
अप्रकाश्यमिमं मन्त्रं सर्वशक्ति समन्वितम् ॥१०॥
स्मरणादेव मन्त्रस्य भूतप्रेतपिशाचका ।
विद्रबत्यतिभीता वै कालरुद्रादिव प्रजाः ॥११॥
ॐ ह्रीं बटुकाय आपदुद्धारणाय कुरु कुरु बटुकाय ह्रीं ।
सर्वकामर्थदं मन्त्रं राज्यभोगप्रदं नृणाम् ॥१२॥
पठेद्वा पाठयेद्वापि पूजयेद्वापि पुस्तकम् ।
अग्नि चौरभयं तत्र ग्रहराजभयं तथा ॥१३॥
न च मारीभयं किञ्चित् सर्वत्र सुखवान् भवेत् ।
आयुराराग्यमैश्वर्यं पुत्रपौत्रादिसंपदः ॥१४॥
भवन्ति सन्ततं स्तस्य पुस्तकस्यापि पूजनात् ।
क एष भैरवो नाम आपदुद्धारणोमतः ॥१५॥
तस्य नामसहस्त्राणि प्रत्युतान्यर्बुदानि च ।
त्वया च कथितो देवो भैरवः कल्पवित्तमः ॥१६॥
सारमुद्धृत्य तेषां वै नामाष्टशतकं वद ।
यानि संकीर्तयन् मर्त्यः सर्वदुःखविवर्जितः ॥१७॥
सर्वान्कामानवाप्नोति साधकः सिद्धिमेव च ।

इश्वरउवाच ॥

शृणु देवि प्रवक्षामि भैरवस्य महात्मनः ॥१८॥
आपदुद्धारकस्येह नामाअष्टशतोत्तरम् ।
सर्वपापहरं पुण्यं सर्वापद्विनिवारणम् ॥१९॥

सर्वकामार्थदं देवि साधकानां सुखावहम् ।
सर्वः मङ्गलमङ्गल्यं सर्वोपद्रवनाशनम् ॥२०॥
बृहदारण्यको नाम ऋषिर्देवोऽथभैरवः ।
नामाष्टशतकस्यास्य छन्दोनुष्टुप्प्रकीर्तितम् ॥२१॥
अष्टबाहुं त्रिनयन-मिति बीजं समीरितम् ।
शक्तिः कं कीलकं शेष-मिष्टसिद्धौ नियोजयेत् ॥२२॥

अथ करन्यासः

ॐ रुद्राय नमः अङ्गुष्ठयो । ॐ शिखिसखाय नमः तर्जन्योः । ॐ शिवाय नमः मध्यमयो । ॐ त्रिशूलिने नमः अनामिकयो । ॐ ब्रह्मणे नमः कनिष्ठिकयो । ॐ त्रिपुरान्तकाय नमः करतलयोः । ॐ मांसाशिने नमः कराग्रे । ॐ सदाशिवायय नमः करपृष्ठे ।

देहन्यासः

ॐ भैरवाय नमः मूर्ध्निः । ॐ भीमदर्शनाय नमः ललाटेः । ॐ भूतहननाय नमः नेत्रयोः । ॐ सारमेयानुगाय नमः भ्रुवोः । ॐ भूतनाथाय नमः कर्णयोः । ॐ प्रेतवाहनाय नमः कपोलयोः। ॐ भस्माङ्गाय नमः नासापुटयोः । ॐ सर्पभूषणाय ओष्ठयोः । ॐ अनादिभूताय नमः आस्येः । ॐ शक्तिहस्ताय नमः कण्ठे । ॐ दैत्यशमनाय नमः स्कन्धयो । ॐ अतुलतेजसे नमः बाव्हो । ॐ कपालिने नमः पाण्यो । ॐ मुण्डमालिने नमः हृदये । ॐ



शान्ताय नमः वक्षस्थले । ॐ कामचारिणे नमः स्तनयो । ॐ सदातुष्टाय नमः उदरे । ॐ क्षेत्रज्ञाय नमः पार्श्वयो । ॐ क्षेत्रपालाय नमः पृष्ठदेशे । ॐ क्षत्रज्ञाय नमः नाभिदेशके । ॐ पापौघनाशाय नमः कटचाम् । ॐ बटुकाय नमः लिङ्गदेशके । ॐ रक्षाकराय नमो गुदे । ॐ रक्तलोचनाय नमः उर्वोः । ॐ घुर्घुररवाय नमो जान्वोः । ॐ रक्तपाणिने नमो जंघयोः । ॐ पादुकासिद्धाय नमो गुल्फयोः । ॐ सुरेश्वराय नमः पादपृष्ठे । ॐ आपदुद्धारहेतुकाय नमः आपादमस्तके ।

दिग्नमस्कारः

ॐ डमरुहस्ताय नमः पूर्वे । ॐ दण्डधारिणे नमः दक्षिणे । ॐ खड्गहस्ताय नमः ॐ पश्चिमायाम् । ॐ घण्टा वादिने नमः उत्तरे । ॐ अग्निवर्णाय नमः आग्नेयाम् । ॐ दिगम्बराय नमो नैऋत्याम् । ॐ सर्वभूतस्थाय नमो वायव्य । ॐ अष्टसिद्धिदाय नमः ईशान्याम् । ॐ खेचरिणे नमः उर्ध्वे । ॐ रौद्ररूपिणे नमः पाताले । इति दिग्बन्धः । )

अथ अंग न्यसः

एवं विन्यस्य देहे स्वे षडङ्गेषु ततो न्यसेत् ॥
ॐ भूतनाथाय नमो ह्रिदय । ॐ अनादिनाथाय नमो मूर्ध्नि । ॐ आनन्दनाथाय नमः शिखायाम् । ॐ

सिद्धखेचरनाथाय नमः कवचाय हुम् । ॐ सहजानन्दनाथाय नमो नेत्रत्रयाय वौषट् । ॐ निःसीमानन्दनाथाय नमः अस्त्रायफट् ।

(एवं न्यासविधि कृत्वा यथावत्तदनन्तरम् ।
ध्यानं तत्र प्रवक्षामि यथा ध्यात्वा पठेन्नरः ॥१॥
शुद्धस्फटिकसङ्काशं सहस्त्रादित्यवर्चसम् ।
नीलजीमूत संकाशं नीलांजनसमप्रभम् ॥२॥
अष्टबाहुत्रिनयनं चतुर्बाहुं द्विबाहुकं ।
दष्ट्राकरालवदनं नूपुरारवसंकुलम् ॥३॥
भुजङ्गमेखलं देव-मग्निवर्णशिरोरुहम् ।
दिगम्बरं कुमारेशं बटुकाख्यं महाबलम् ॥४॥
खट्वांगमपि पाशं च शूल दक्षिणभागतः ।
डमरुं च कपालं च वरदं भुजगं तथा ॥५॥
अग्निवर्णसमोपेतं सारमेयसमन्वितम् ।
ध्यात्वा जपेत् सुसन्तुष्टः सर्वकामानुवाप्नुयात् ॥६॥
करकलितकपालः कुण्डली दण्डपाणि -
स्तरुणतिमिरनील- ब्यालयज्ञोपवीती ।
ऋतुसमयसपर्य्या- विध्नविच्छेदहेतु -
र्जयतिबटुकनाथः सिद्धिदः साधकानाम् ॥७॥

अस्य श्रीबटुकभैरवस्तवराजस्य आपदुद्धारणस्य बृहदारण्यक ऋषिः अनुष्टुप् छन्द आपदुद्धारणबटुक भैरवो देवता ।



अष्टबाहुं त्रिनयनमिति बीजम् । कं शक्तिः । शेषं कीलकम् । ममाभीष्टसिद्धचर्थे जपे विनियोगः ।

ॐ बृहदारण्यकऋषये नमः शिरसि । ॐ अनुष्टुप् छन्दसे नमः मुखे । ॐ अष्टबाहुबटुकभैरवदेवतायै नमः हृदि । ॐ अष्टबााहु त्रिनयनमितिबीजाय नमः गुह्ये । ॐ कं शक्तये नमः पादयोः ॐ शेषमिति ।

ॐ ह्रां बां अङ्गुष्ठाभ्यां नमः । ॐ ह्रीं बीं तर्जनीभ्यां नमः । ह्रूं बूं मध्यमाभ्यां नमः । ॐ ह्रैं बैं अनामिकाभ्यां नमः । ॐ ह्रौं बौं कनिष्ठिकाभ्यां नमः । ॐ ह्रः बः करतलकरपृष्ठाभ्यां नमः । एवं हृीदयनदिन्यासः । (भूर्भुवः स्वरोहम् ।

अथ करन्यासः ॥

ॐ भूतनाथाय नमः अङ्गुष्ठाभ्यां नमः । ॐ आदिनाथाय नमः तर्जनीभ्यां नमः । ॐ आनन्दनाथाय नमः मध्यमाभ्यां नमः । ॐ सिद्धखेचरनाथाय नमः अनामिकाभ्यां नमः । ॐ सहजानन्दनाथाय नमः कनिष्ठिकाभ्यां नमः । ॐ निःसीमानन्दनाथाय नमः करतलकरपृष्ठाभ्यां नमः ।

ॐ भूतनाथाय नमः हृदि । ॐ आदिनाथाय नमः मूर्ध्नि । ॐ आनन्दनाथाय नमः शिखायाम । ॐ सिद्धिखेचरनाथाय नमः कवचायहुम् । ॐ

सहजानन्दनाथाय नमः नेत्रत्रयाय वौषट् । ॐ निःसीमानन्दनाथाय नमः अस्त्राय फट् ।

(सात्विक ध्यानम्)

ॐ बन्दे बालं स्फटिक सदृशं कुण्डलोद्भासिवक्त्रं ,
दिव्याकल्पैनवमणिमयैः किंकिणीनूपुराढ्यैः ।
दीप्ताकासं विशदवदनं सुप्रसन्नं त्रिनेत्रम् ,
हस्ताब्जाभ्यां बटुकमनिशं शूलखड्गं दधानम् ॥१॥

अथ राजसध्यानम्)

उद्यद् भास्करसन्निभं त्रिनयनं रक्तांगरागस्रजं ,
स्मेरास्यं वरदं कपालमभयं शूलं दधानं करैः ।
नीलगृवमुदारकौस्तुभधरं शीतांशुखंडोज्वलं ,
बन्धूकारुण वाससं भयहरं वन्दे सदा भैरवम् ॥२॥

(अथ तामसध्यानम्) ॥

ध्यायेन्नीलाकान्तं शशिसकलधरं मुण्डमालं महेशम् , दिग्वस्त्रं पिंगकेशं डमरुमथ सृणिं शूलखड्गौ दधानम् । नागं घण्टां कपालं करसरसिरुहैर्विभ्रतं भीमद्रष्टं , सर्पाकल्पं त्रिनेत्रं मणिमयविलसत्किंकिणीनूपुराढचम् ॥३॥ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम । भैरवाय नमस्तुभ्यं-मनुज्ञां दातुमर्हसि ॥४॥
शान्तं पद्मासनस्थं शशिसकलधरं पञ्चवक्त्रं त्रिनेत्रं , शूलं वज्रं च खड्गं परशुमुसले दक्षिणाङ्गे वहन्तम् । नागं पाशं च घण्टां प्रलयहुतवहं साङ्कुशं वामभागे ,



बटुक भैरव स्तुति

ॐ भैरवो भूतनाथश्च भूतात्मा भूतभावनः ।
क्षेत्रज्ञः क्षत्रपालश्च क्षेत्रदः क्षत्रियो विराट् ॥१॥
श्मशानवासी मांसाशी खर्पराशी स्मरान्तकः ।
रक्तपः पानदः सिद्धः सिद्धिदः सिद्धसेवितः ॥२॥
कंकाल कामशमनः कलाकाष्ठातनुः कविः ।
त्रिनेत्रो बहुनेत्रश्च तथा पिंगल लोचनः ॥३॥
शूलपाणिः खड्गपाणिः कंकाली धूम्रलोचन ।
अभीरुभैरवी नाथो भूतपो योगिनीपतिः ॥४॥
धनदो धनहारी च धनवान् प्रतिभानवान् ।
नागहारो नागपाशो ब्योमकेशः कपालधृत् ॥५॥
कालः कपालमाला च कमनीयः कलानिधिः ।
त्रिलोचनो ज्वलन्नेत्र-स्त्रिशिखी च त्रिलोकपः ॥६॥
त्रिनेत्रतनयो डिंभः शान्तः शान्तजनप्रियः ।
बटुको बटुकेशश्च खट्वाङ्गवरधारकः ॥७॥
भूताध्यक्षः पशुपतिर्भिक्षुकः परिचारकः ।
धूर्तो दिगम्बरः शूरो हारिणः पाण्डुलोचनः ॥८॥
प्रशान्तः शान्तिदः शुद्धः शंकरः प्रियबांधवः ।
अष्टमूर्तिर्निधिशश्च ज्ञानचक्षुस्तपोधनः ॥९॥
अष्टाधारः षडाधारः सर्पयुक्तः शिखीसखः ।
भूधरो भूधराधीशो भूपतिर्भूधरात्मजः ॥१०॥

कङ्कालधारी मुंडी च नागयज्ञोपवीतवान्: ।
जृम्भणो मोहनस्तंभी मारणः क्षोभणास्तथा ॥११॥
शुद्धनीलाञ्जनप्रख्यो दैत्यहा मुण्डभूषितः ।
बलिभुग्बलिभुङ्नाथो बालो बालपराक्रमः ॥१२॥
सर्वापत्तारणो दुर्गो दुष्टभूतनिसेवितः ।
कामी कलानिधिः कांतः कामिनीवशकृद्बशी ॥१३॥
सर्वासिद्धिप्रदो बैद्यः प्रभुर्विष्णुरितिव हि ।

पुनर्मूलमन्त्रजपः १०८

अण्टोत्तरशतं नाम्नां भैरवस्य महात्मनः ।
( मया ते कथितं देवि रहस्यं सर्वकामदम् ॥ १४॥)
य इदं पठते स्तोत्रं नामाष्टशतमुत्तमम् ।
न शत्रुभ्यो भयंकिञ्चि द्रोगाणां च भयं नहि ॥१५॥
न शत्रुतो भयंकिञ्चित् प्राप्नुयात् मानवः क्वचित् ॥ १६॥
पातकानां भयंनैव यःपठेत्स्तोत्रमनुत्तमम् ।
मारीभये राजभये तथा चौराग्निजे भये ॥१७॥
औत्पातिके माहाघोरे तथा दुःस्वप्नदर्शने ।
बंधने च माहाघोरे पठेत्स्तोत्रमनुत्तमम् ॥१८॥
सर्वं प्रशमनं याति भयं भैरवकीर्तनात् ।
एकादशसहस्त्रं तु पुरश्चरणमुच्यते ॥१९॥
यस्त्रिसंध्यं पठेद्देवि सम्वत्सरमतन्द्रितः ।
स सिद्धिं प्राप्नुयादिष्टां दुर्लभामपि मानवः ॥२०॥
षण्मासं भूमिकामस्तु जपित्वा प्राप्नुयान् महीम् ।



राजशत्रुविनाशार्थं जठेन्मासाष्ठकं यदि ॥२१॥
रात्रौ वारत्रयं चैव नाशयेत्वेव शस्त्रवान् ।
जपेन् मासत्रयं मर्त्यो राजानं वशमानयेत् ॥२२॥
धनार्थी च सुतार्थी च दारार्थी यस्तुमानवः ।
जपेन् मासत्रयं देवि वारमेकं तथा निशि ॥२३॥
धनं पुत्राँस्तथा दारं प्राप्नुयान्नात्र संशयः ।
निगडे चापि यो बद्धः कारागृहानिपातितः ॥२४॥
शृंखलाबंधनं प्राप्तः पठेच्चैव दिवानिशि ।
यान् यान् समीहते कामाँस्तास्तान् प्राप्नोत्यसंशयः
॥२५॥ अप्रकाश्यमिदं गुह्यं न देयं यस्यकस्यचित् ॥
सुकुलीनाय शांताय ॠजवे दम्भवर्जिते ॥२६॥
द्येयं स्तोत्रमिदं पुन्यं सर्वकामफलप्रदम् ।
भैरवोपि प्रहष्टोऽभूत् स्वयं च परमेश्वर ॥२७॥
एवं श्रुत्वा ततो देवी नामाष्टशतमुत्तमम् ।
संतोषं परमं प्राप्य भैरवस्य महात्मनः ॥२८॥
जजाप परया भक्त्या सदा सर्वे श्वरेश्वरी ।

हरतु कुलगणेशो विघ्नसंघानशेषान् ,
नयतु कुलसपर्यां पूर्णतां साधकानाम् ।
पिवतु बटुकनाथः शोणितं निन्दकानां ,
वितरतु स हि कामान् कौलिकानां गणेशः ॥

इति रुद्रयामले हरगारीसम्वादे बटुकभैरवस्तोत्रम् संपूर्णम् ॥

शनिमृत्युञ्जयस्तोत्रम्

श्रीगणेशाये नमः ॐ नमोमृत्युञ्जयाये नमः

नन्दिकेशर उवाच

कैलासस्योत्तरे शृङ्गे शुद्धफटिकसन्निभे ।
तमोगुणविहीने तु जरामृत्युविवर्जिते ॥१॥
सर्वार्थसंपदाधारे सर्वज्ञानकृतालये ।
कृताञ्जलिपुटो ब्रह्मा ध्यानासीनं सदाशिवम् ॥२॥
पप्रच्छ प्रणतो भूत्वा जानुभ्यामवनि गतः ।
सर्वार्थसम्पदाधार ब्रह्मा लोकपितामहः ॥३॥

ब्रमो वाच

केनोपायेन देवेश चिरायुर्लोमशोऽभवत् ।
तन्मेब्रुहि महेशान लोकानां हितकाम्यया ॥४॥

श्रीसदाशिव उवाच

शृणु ब्रह्मन् प्रवक्ष्यामि चिरायुर्मुनिसत्तमः ।
सञ्जातः कर्मणा येन व्यधिमृत्युविवर्जितः ॥५॥
तस्मिन्नेकार्णवे घोरे सलिलौघपरिप्लुते ।
कृतान्तभयेनाशाय स्तुतो मृत्युञ्जयः शिवः ॥६॥
तस्य संकीर्त्तनान्नित्यं मुनिमृत्युविवर्ज्जितः ।
तमेव कीर्तयन् ब्रह्मन् मृत्युजेतुं न संशयः ॥७॥

लोमश उवाच

ॐ देवाधिदेवदेवेश सर्वप्राणभृतांवर ।
प्राणिनामपि नाथस्त्वं मृत्युञ्जय नमोऽस्तु ते ॥८॥



देहिनां जीवभूतोऽसि जीवोजीवस्य कारणम् ।
जगतां रक्षकस्त्वं वै मृत्युञ्जय नमोऽस्तु ते ॥९॥
हेमाद्रिशिखराकार सुधावीचिमनोहर ।
पुण्डरीकपरंज्योति मृत्युञ्जय नमोऽस्तु ते ॥१०॥
ध्यानाधार महाज्ञान सर्वज्ञानैककारण ।
परित्रातासि लोकानां मृत्युञ्जय नमोऽस्तु ते ॥११॥
निहता येन कालेन सदेवासुरमानुषाः ।
गन्धर्वाप्सरसस्चैव सिद्धविद्याधरास्तथा ॥१२॥
साध्याश्च वसवो रुद्रास्तथाश्विनिसुतावुभौ ।
मरुतश्च दिशो नागाः स्थावरा जङ्गमास्तथा ॥१३॥
सर्वे देवास्वयं शंभु माता पिता स्वयंगुरु ।
जितःसोऽपि त्वया विश्वं मृत्युञ्जय नमोऽस्तु ते ॥१४॥
ये ध्यायन्त्ये परां मूर्तिपूजयन्त्यमरादय ।
न ते मृत्युवशं यान्ति मृत्युञ्जय नमोऽस्तु ते ॥१५॥
त्वमोङ्कारोऽसि वेदानां देवानां च सदाशिवः ।
आधारशक्तिः शक्तिनां मृत्युञ्जय नमोऽस्तु ते ॥१६॥
स्थावरे जङ्गमे वापि यावत्तिष्ठति देहगः ।
जीवत्यपत्यलोकोयं मृत्युञ्जय नमोऽस्तु ते ॥१७॥
सोमसूर्याग्निमध्यस्थ व्योवयापिन् सदाशिव ।
कालत्रय महाकाल मृत्युञ्जय नमोऽस्तु ते ॥१८॥
प्रबुद्धे चाप्रबुद्धे च त्वमेव सृजते जगत् ।
सृष्टिरूपेण देवेश मृत्युञ्जय नमोऽस्तु ते ॥१९॥

व्योम्नि त्वं वयोमरूपोऽसि तेजः सर्वत्र तेजसि ।
ज्ञानिनां ज्ञानरूपोऽसि मृत्युञ्जय नमोऽस्तु ते ॥२०॥
जगज्जीवो जगत्प्राणः स्रष्टा त्वं जगतः प्रभुः ।
कारणं सर्वतीर्थानां मृत्युञ्जय नमोऽस्तु ते ॥२१॥
नेता त्वमिन्द्रियाणां च सर्वज्ञानप्रबोधकः ।
सांख्ययोगश्च हंसश्च मृत्युञ्जय नमोऽस्तु ते ॥२२॥
रूपातीतः सरूपश्च पिण्डस्थपदमेव च ।
चतुयुगकलाधार मृत्युञ्जय नमोऽस्तु ते ॥२३॥
रेचके वन्हिरूपोऽसि सोमरूपोऽसिपूरके ।
कुम्भके शिवरूपोऽसि मृत्युञ्जय नमोऽस्तु ते ॥२४॥
क्षयङ्करोऽसि पापानां पुण्यानामपि पर्द्धनम् ।
हेतुस्त्वं श्रेयसां नित्यं मृत्युञ्जय नमोऽस्तु ते ॥२५॥
सर्वमायाकलातीत सर्वेन्द्रियपरावर ।
सर्वेद्रियकलाधीश मृत्युञ्जय नमोऽस्तु ते ॥२६॥
रूपं गन्धो रसः स्पर्शः शब्दः संकारएव च ।
त्वत्तः प्रकाश एतेषां मृत्युञ्जय नमोऽस्तु ते ॥२७॥
चतुर्विधानां सृष्टीनां हेतुस्त्वं कारणेश्वर ।
भावाभावपरिच्छिन्न मृत्युञ्जय नमोऽस्तु ते ॥२८॥
त्वमेको निष्कलो लोके सकलं भुवनत्रये ।
अतिसूक्ष्माततितिरूपस्त्वं मृत्युञ्जय नमोऽस्तु ते ॥२९॥
त्वं प्रबोधस्त्वमाधार त्वद्बीजं भुवनत्रयम् ।
सत्वं रजस्तमस्त्वं हि मृत्युञ्जय नमोऽस्तु ते ॥३०॥



त्वं सोमस्त्वं दिनेशश्च त्वमात्मा प्रकृतेः परः ।
अष्टात्रिंशत्कलानाथ मृत्युञ्जय नमोऽस्तु ते ॥३१॥
सर्वेन्द्रियाणामाधारः सर्वभूतगुणाक्षयः ।
सर्वज्ञानमयानन्त मृत्युञ्जय नमोऽस्तु ते ॥३२॥
त्वमात्मा सर्वभूतानां गुणानां त्वमधीश्वरः ।
सर्वानन्दमयाधार मृत्युञ्जय नमोऽस्तु ते ॥३३॥
त्वं यज्ञः सर्वयज्ञानां त्वं बुद्धिबोधलक्षणा ।
शब्दब्रह्मत्वमोङ्कर मृत्युञ्जय नमोऽस्तु ते ॥३४॥

श्रीसदाशिव उवाच

एवं सङ्कीर्त्तयेद्यस्तु शुचितद्गतमानसः ।
भक्त्या शृणोति यो ब्रह्मन् न स मृत्युवशो भव्त्
॥३५॥ न च मृत्युभयं तस्य प्रातकालं च लङ्घयेत् ।
अपमृत्युभयं तस्य प्रणस्यति न संशयः ॥३६॥
व्याधयो नोपपद्यन्ते नोपसर्ग भयं भवेत् ।
प्रत्यासन्नान्तरे काले शतैकावर्तने कृते ॥३७॥
मर्त्युर्नजायते तस्य रोगान्मुञ्चति निश्चितम् ।
पञ्चम्यां वा दशम्यां वा पौर्णमास्या मथापिवा ॥३८॥
शतमावर्तयेद्यस्तु शतवर्षं स जीवति ।
तेजस्वी बलसम्पन्नो लभते श्रीयमुत्तमाम् ॥३९॥
त्रिविधं नाशयेत् पापं मनो वाक्कायसम्भवम् ।
अभिचाराणि कर्माणि कर्माण्यथर्वणानि च ।
क्षीयन्ते नात्र सन्देहो दुःस्वप्नश्च विनश्यति ॥४०॥

इदंरहस्यं परमं देवदेवस्यशूलिनः ।
दुःस्वप्ननाशनं पुण्यं सर्वविघ्नविनाशनम् ॥४१॥
इति श्री शिवब्रह्मसंवादे श्री मृत्युञ्जयस्तोत्रम् सपूर्णम्

श्री गणेशाये नमः

श्रीकृष्ण उवाच

किं ते नामसहस्त्रेण विज्ञातेन नवाऽर्जुन ।
तानि नामानि विज्ञाय नरः पापैः प्रभुच्यते ॥१॥
प्रथमं तु हरिं विन्द्याद् द्वितीयं केशवं तथा ।
तृतीयं पद्मनाभं च चतुर्थं वामनं स्मरेत् ॥२॥
पञ्चमं देवगर्भ तु षष्ठं च मधुसूदनम् ।
सप्तमं वासुदेवं च वाराहं चाऽष्टमं तथा ॥३॥
नवमं पुण्डरिकाक्षं दशमं तु जनार्दनम् ।
कृष्णमेकादशं विन्द्याद् द्वादशं श्रीधरं तथा ॥४॥
एतानि द्वादश नामानि विष्णुप्रोक्ते विधीयते ।
सायंप्रातः पठेन्नित्यं तस्य पुण्य फलं श्रृणु ॥५॥
चान्द्रायणसहस्राणि कन्यादानशतानि च ।
अश्वमेधसहस्राणि फलं प्राप्नोत्य संशयः ॥६॥
आमायां पौर्णमास्यां च द्वादश्यां तु विशेषतः ।
प्रातःकाले पठेन्नित्यं सर्व पापैः प्रमुच्यते ॥७॥
इति श्रीमन्महाभारतेऽरण्यपर्वणि- कृष्णद्वादहनामस्तोत्रं सम्पूर्णम्



सिद्धि गणेश स्तोत्रम्

नारद उवाच

प्रणम्य शिरसा देवं गौरिपुत्रम् विनायकम् ।
भक्तावासं स्मरेनित्यमायुः कामार्थऽसिद्धये ॥१॥
प्रथमं वक्रतुण्डं च एकदन्तं द्वितियकम् ।
तृतियं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥२॥
लम्बोदरं पञ्चमं च षगष्ठं विकटमेव च ।
सप्तमं विघ्नराजं च धूम्रवर्णं तथाऽष्टमम् ॥३॥
नवमं भालचन्द्रं च दशमं तु विनायकम् ।
एकादशं गणपतिम् द्वादशंतु गजाननम् ॥४॥
द्वादशैतानि नामानि त्रिशंध्यं यः पठेनरः ।
न च विघ्नभयं तस्य सर्वसिद्धिकरं प्रभो ॥५॥
विद्यार्थी लभते विद्यां धनार्थी लभते धनम् ।
पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ॥६॥
जपेद् गणपतिस्तोत्रम् षड्भिर्मासैः फलम् लभेत् ।
संवत्सरेण सिद्धिं च लभते नात्र शंसयः ॥७॥
अष्टाभ्यो ब्रह्मणेभ्यश्च लिखित्वा यः समर्पयेत् ।
तस्य विद्या भवेत्सर्वा गणेशस्य प्रशादतः ॥८॥
इतिश्री नारदपुराणे श्रीसङ्कटनाशजगणेशस्तोत्रम् सम्पूर्णम्

लेखक पं कृष्ण प्रशाद आचार्य
मीती २०५७ साल ज्येष्ठ२७मङ्गल वार पुर्णभयो